## तृतीयः सर्गः

### लङ्कामवलोक्य हनुमतो विस्मयस्तत्र प्रविशतस्तस्य लङ्कयावरोधस्तत्प्रहारेण पीडितया तया तस्मै पुर्य्यां प्रवेष्टुमनुमतिदानम् ।

स लम्बशिखरे लम्बे लम्बतोयदसन्निभे।
सत्त्वमास्थाय मेधावी हनुमान् मारुतात्मजः।।5.3.1।।

निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः।
रम्यकाननतोयाढ्यां पुरीं रावणपालिताम्।।5.3.2।।

शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम्।
सागरोपमनिर्घोषां सागरानिलसेविताम्।।5.3.3।।

सुपुष्टबलसम्पुष्टां यथैव विटपावतीम्।
चारुतोरणनिर्यूहां पाण्डुरद्वारतोरणाम्।।5.3.4।।

भुजगाचरितां गुप्तां शुभां भोगवतीमिव।
तां सविद्युद्धनाकीर्णां ज्योतिर्गणनिषेविताम्।।5.3.5।।

चण्डमारुतनिर्ह्लादां यथा चाप्यमरावतीम् ।
शातकुम्भेन महता प्राकारेणाभिसंवृताम्।।5.3.6।।

किङ्किणीजालघोषाभिः पताकाभिरलङ्कृताम्।
आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान्।।5.3.7।।

विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः।
जाम्बूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः।।5.3.8।।

वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः।
तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः।।5.3.9।।

वैदूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः।
चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः।।5.3.10।।

क्रौञ्चबर्हिणसङ्घुष्टै राजहंसनिषेवितैः।
तूर्याभरणनिर्घोषैः सर्वतः परिनादिताम्।।5.3.11।।

वस्वोकसारप्रतिमां समीक्ष्य नगरीं ततः।
खमिवोत्पतितां लङ्कां जहर्ष हनुमान् कपिः।।5.3.12।।

तां समीक्ष्य पुरीं रम्यां राक्षसाधिपतेः शुभाम्।
अनुत्तमामृद्धिमतीं चिन्तयामास वीर्यवान्।।5.3.13।।

नेयमन्येन नगरी शक्या धर्षयितुं बलात्।
रक्षिता रावणबलैरुद्यतायुधपाणिभिः।।5.3.14।।

कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः।
प्रसिद्धेयं भवेद् भूमिर्मैन्ददद्विविदयोरपि।।5.3.15।।

विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः।
ऋक्षस्य कपिमुख्यस्य मम चैव गतिर्भवेत्।।5.3.16।।

समीक्ष्य च महाबाहो राघवस्य पराक्रमम्।
लक्ष्मणस्य च विक्रान्तमभवत् प्रीतिमान् कपिः।।5.3.17।।

तां रत्नवसनोपेतां गोष्ठागारावतंसिकाम्।
यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम्।।5.3.18।।

तां नष्टतिमिरां दीपैर्भास्वरैश्च महागृहैः।
नगरीं राक्षसेन्द्रस्य स ददर्श महाकपिः।।5.3.19।।

अथ सा हरिशार्दूलं प्रविशन्तं महाकपिम्।
नगरी स्वेन रूपेण ददर्श पवनात्मजम्।।5.3.20।।

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता।
स्वयमेवोत्थिता तत्र विकृताननदर्शना।।5.3.21।।

पुरस्तात् तस्य वीरस्य वायुसूनोरतिष्ठत।
मुञ्चमाना महानादमब्रवीत् पवनात्मजम्।।5.3.22।।

कस्त्वं केन च कार्येण इह प्राप्तो वनालय।
कथयस्वेह यत् तत्त्वं यावत् प्राणा धरन्ति ते।।5.3.23।।

न शक्यं खल्वियं लङ्का प्रवेष्टुं वानर त्वया।
रक्षिता रावणबलैरभिगुप्ता समन्ततः।।5.3.24।।

अथ तामब्रवीद् वीरो हनुमानग्रतः स्थिताम्।
कथयिष्यामि तत् तत्त्वं यन्मां त्वं परिपृच्छसे।।5.3.25।।

का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसे।

किमर्थं चापि मां क्रोधान्निर्भर्त्सयसि दारुणे।।5.3.26।।

हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी |

उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ||5.3.27||

अहं राक्षसराजस्य रावणस्य महात्मनः।

आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम्।।5.3.28।।

न शक्यं मामवज्ञाय प्रवेष्टुं नगरीमिमाम्।

अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया।।5.3.29।।

अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम।

सर्वतः परिरक्षामि अथस्ते कथितं मया।।5.3.30।।

लङ्काया वचनं श्रुत्वा हनुमान् मारुतात्मजः।

यत्नवान् स हरिश्रेष्ठः स्थितः शैल इवापरः।।5.3.31।।

स तां स्त्रीरूपविकृतां दृष्टवा वानरपुङ्गवः।
आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः।।5.3.32।।

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम्।
इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे।।5.3.33।।

वनान्युपवनानीह लङ्कायाः काननानि च।
सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे।।5.3.34।।

तस्य तद् वचनं श्रुत्वा लङ्का सा कामरूपिणी।
भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम्।।5.3.35।।

मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालितां।
न शक्यं ह्यद्य ते द्रष्टुं पुरीयं वानराधम।।5.3.36।।

ततः स हरिशार्दूलस्तामुवाच निशाचरीम्।
दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम्।।5.3.37।।

ततः कृत्वा महानादं सा वै लङ्का भयंकरम्।
तलेन वानरश्रेष्ठं ताडयामास वेगिता।।5.3.38।।

ततः स हरिशार्दूलो लङ्कया ताडितो भृशम्।

ननाद सुमहानादं वीर्यवान् मारुतात्मजः।।5.3.39।।

ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः।

मुष्टिनाऽऽभिजघानैनां हनुमान् क्रोधमूर्छितः।।5.3.40।।

स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः।

सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी।।5.3.41।।

पपात सहसा भूमौ विकृताननदर्शना।

ततस्तु हनुमान् वीरस्तां दृष्ट्वा विनिपातिताम्।।5.3.42।।

कृपां चकार तेजस्वी मन्यमानः स्त्रियं च ताम्।

ततो वै भृशमुद्विग्ना लङ्का सा गद्गदाक्षरम्।।5.3.43।।

उवाचागर्वितं वाक्यं हनूमन्तं प्लवङ्गमम्।

प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ।।5.3.44।।

समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः।

अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम।।5.3.45।।

निर्जिताहं त्वया वीर विक्रमेण महाबल।

इदं च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर।।5.3.46।।

स्वयंस्वयंभुवा दत्तं वरदानं यथा मम।

यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत्।।5.3.47।।

तदा त्वया हि विज्ञेयं रक्षसां भयमागतम्।

स हि मे समयः सौम्य प्राप्तोऽद्य तव दर्शनात्।।5.3.48।।

स्वयंभू विहितः सत्यो न तस्यास्ति व्यतिक्रमः।

सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः।।5.3.49।।

रक्षसां चैव सर्वेषां विनाशः समुपागतः।

तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम्।।5.3.50।।

विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि।

प्रविश्य शापोपहतां हरीश्वर पुरीं शुभां राक्षसमुख्यपालिताम्।

यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम्।।5.3.51।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे तृतीयः सर्गः ||